• चिन्तामणिः •

यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते, किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते, अनुमितौ तूत्पत्तिरेव प्रतिबध्यते। ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ अनुमानाख्यद्वितीयखण्डे हेत्वाभाससामान्यनिरुक्तिः समाप्ता।

---

• दीधितिः •

यद्वेत्याद्यभ्युपगममात्रं प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात्। योग्यताज्ञानेनान्यथासिद्ध यात्

• गादाधरी •

निर्भरमाह यद्वेत्यादीति। नन्वानुमानिकबाधादिनिश्चयदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षनिश्चयोत्पत्त्या बाधनिश्चयसामान्यस्य प्रत्यक्षप्रतिबन्धकत्वं न सम्भवतीत्यनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वावच्छिन्नस्याक्षतमतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तद्वत्त्वस्य लक्ष्यताप्रयोजकत्वाभिप्रायेण यद्वेत्यादिग्रन्थस्य बाधे लक्ष्यतोपपादकत्वं सुसङ्गच्छते इत्यत आह प्रत्यक्षं प्रतीति।

समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षस्याप्यनुत्पत्तेरानुमानिकेति बाधनिश्चयविशेषणम्। शाब्दं प्रतीति। तथाच तावतैव लिङ्गासाधारणदोषत्वव्याघात इति भावः।

तत्रापि तदप्रतिबन्धकत्वमाशङ्कते योग्यतेति। अन्यथासिद्धत्वादिति। बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव शाब्दबोधानुत्पाद-

• चन्द्रकला •

प्रत्यक्षप्रतिबन्धकत्वमसम्भवि, आनुमानिकबाधनिश्चयदशायाम् प्रत्यक्षोत्पादस्यावश्यकत्वादिति बाधादेः अनुमितिमात्रविरोधितया तस्य लिङ्गासाधारणदोषत्वं निर्विवादमिति तु न शक्यम्, शाब्दं प्रति बाधादेर्विरोधित्वादेव तस्यानुमितिमात्राविरोधित्वात् इति दीधितिकाराशयं प्रदर्शयति तथाचेति।

तावतैव = शाब्दं प्रति बाधादिनिश्चयस्य प्रतिबन्धकत्वादेव। तत्रापि = शाब्दबोधेऽपि। शाब्दबोधानुत्पादेति। बाधादिनिश्चयस्यैव योग्यताज्ञानप्रतिबन्धकत्वादित्याशयः।

॥ दीधितिः ॥

तदभावो न तत्र हेतुरिति चेद्देयमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति महामहोपाध्याय—श्रीरघुनाथशिरोमणिभट्टाचार्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधितिः समाप्ता ।

---

• गादाधरी •

निर्व्वाहादिति भावः । तदभावः = बाधादिनिश्चयाभावः, तत्र = शाब्दबुद्धौ । यद्यपि योग्यबाधसंशयद्वितीयक्षणे स्मरणाद्यात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वम् , तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्विवादोपनीतभाने विशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणासम्भवात्तत्रैव तन्निराकरोति एवमपीति । उपनीतभानविशेषम् = दोषविशेषाजन्योपनीतभानविशेषम्, तत्त्वेन = बाधनिश्चयाद्यभावत्वेन । दुर्व्वारत्वादिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्वानुभवसिद्धत्वादिति भावः ।

इति महामहोपाध्याय—श्रीगदाधरभट्टाचार्यविरचिता हेत्वाभाससामान्यनिरुक्तिदीधितिविवृतिः समाप्ता ।

---

• चन्द्रकला •

योग्यतासंशयस्य ग्राह्यसंशयात्मकतया तस्य प्रत्यक्षादिप्रतिबन्धकत्वात् स्मरणाद्यात्मकेति । आदिना आनुमानिकबाधादिनिश्चयपरिग्रहः । तदभावस्य = बाधादिनिश्चयाभावस्य ।

तथापि बाधादेर्न लिङ्गासाधारणदोषत्वम् उपनीतभानं प्रति तस्य प्रतिबन्धकत्वादित्यादिदीधितिं व्याचष्टे तत्त्वेनेति । तादृशोपनीतेति दोषविशेषाजन्योपनीतेत्यर्थकम् , अन्यत् सुगममितिदिक् ।

इति श्रीमदुदासीनवरपरमहंसपरिव्राजकाचार्यवर्य श्रीमत्स्वामिभगवद्दासभगवत्पादशिष्य - समस्तभारतवर्षप्रसिद्ध-सिन्धुमहानदान्तर्वर्ति - श्रीसाधुबेलातीर्थपीठपदधारकमहामण्डलेश्वर-स्वामिश्रीहरिनामदासविरचिता हेत्वाभाससामान्यनिरुक्तिचन्द्रकला टीका समाप्ता ।





• चिन्तामणिः •

यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते, किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते, अनुमितौ तूत्पत्तिरेव प्रतिबध्यते।

ते च सव्यभिचारविरुद्धसत्प्रतिपक्षाऽसिद्धबाधिताः पञ्च।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
अनुमानाख्यद्वितीयखण्डे हेत्वाभास-
सामान्यनिरुक्तिः समाप्ता।

---

• दीधितिः •

यद्वेत्याद्यभ्युपगममात्रं प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात्। योग्यताज्ञानेनान्यथासिद्ध यान्

• गादाधरी •

निर्भरमाह यद्वेत्यादीति। नन्वानुमानिकबाधादिनिश्चयदशायामपि लौकिकसन्निकर्षादितः प्रत्यक्षनिश्चयोत्पत्त्या बाधनिश्चयसामान्यस्य प्रत्यक्षप्रतिबन्धकत्वं न सम्भवतीत्यनुमित्यसाधारणप्रतिबन्धकत्वं बाधनिश्चयत्वावच्छिन्नस्याक्षतमतो यद्विषयकनिश्चयत्वेनानुमित्यसाधारणप्रतिबन्धकत्वं तद्वत्त्वस्य दुष्टताप्रयोजकत्वाभिप्रायेण यद्वेत्यादिग्रन्थस्य बाधे दुष्टत्वोपपादकत्वं सुसङ्गच्छते इत्यत आह प्रत्यक्षं प्रतीति।

समानेन्द्रियजन्यबाधनिश्चयसत्त्वे लौकिकप्रत्यक्षानिकेति बाधनिश्चयविशेषणम्। शाब्दं प्रतीति। लिङ्गासाधारणदोषत्वव्याघात इति भावः।

तत्रापि तदप्रतिबन्धकत्वमाशङ्कते योग्यतेति। अन्य बाधादिनिश्चयदशायां योग्यताज्ञानरूपकारणविरहेणैव श

• चन्द्रकला •

प्रत्यक्षप्रतिबन्धकत्वमसम्भवि, आनुमानिकबाधनिश्चयदशायाम् बन्धकत्वादिति बाधादेः अनुमितिमात्रविरोधितया तस्य लिङ्ग निर्विवादमिति तु न शक्यम्, शाब्दं प्रति बाधादेर्विरोधित्वादेव त विरोधित्वात् इति दीधितिकाराशयं प्रदर्शयति तथा चेति।

तावतैव = शाब्दं प्रति बाधादिनिश्चयस्य प्रतिबन्धकत्वादेव। त बोधेऽपि। शाब्दबोधानुत्पादेति। बाधादिनिश्चयस्यैव योग्यता कत्वादित्याशयः। ..

### ❀ दीधिति ❀

तदभावो न तत्र हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वात् ।

इति महामहोपाध्याय—श्रीरघुनाथशिरोमणिभट्टाचार्य्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधितिः समाप्ता ।

---

### * गादाधरी *

निर्व्वाहादिति भावः । तदभावः = बाधादिनिश्चयाभावः, तत्र = शाब्दबुद्धौ । यद्यपि योग्यबाधसंशयद्वितीयक्षणे स्मरणाद्यात्मकयोग्यतानिश्चये सति तद्द्वितीयक्षणे शाब्दज्ञानवारणाय तदभावस्य शाब्दबोधहेतुत्वस्यावश्यकत्वम्, तथापि बाधादिज्ञानस्य शाब्दाप्रतिबन्धकत्वेऽपि निर्विवादोपनीतभाने विशेषप्रतिबन्धकतयैव बाधादेर्लिङ्गासाधारणदोषत्वनिराकरणसम्भवात्तेनैव तन्निराकरोति एवमपीति । उपनीतभानविशेषम् = दोषविशेषाजन्योपनीतभानविशेषम्, तत्त्वेन = बाधनिश्चयाद्यभावत्वेन । दुर्व्वारत्वादिति । बाधादिनिश्चयदशायामनुमितेरिव तादृशोपनीतभानानुत्पादस्य सर्व्वानुभवसिद्धत्वादिति भावः ।

इति महामहोपाध्याय—श्रीगदाधरभट्टाचार्य्यविरचिता हेत्वाभाससामान्यनिरुक्तिदीधितिविवृतिः समाप्ता ।

---

### * चन्द्रकला *

योग्यतासंशयस्य माह्यसंशयात्मकतया तस्य प्रत्यक्षादिप्रतिबन्धकत्वात् स्मरणाद्यात्मकेति । आदिना आनुमानिकबाधादिनिश्चयपरिग्रहः । तदभावस्य = बाधादिनिश्चयाभावस्य ।

तथापि बाधादेर्न लिङ्गाऽसाधारणदोषत्वम् उपनीतप्रत्यक्षं प्रति तस्य प्रतिबन्धकत्वादित्याह दीधितिः व्याचष्टे तत्त्वेनेति । तादृशोपनीतेति दोषविशेषाजन्योपनीतेत्यर्थकम्, अन्यत् सुगममितिदिक् ।

इति श्रीमदुदासीनपरमहंसपरिव्राजकाचार्यवर्य श्रीमत्स्वामिजयरामदासभगवत्पादशिष्य - समस्तभारतवर्षप्रसिद्ध सिन्धुमहानदान्तर्वर्ति - श्रीसाधुवेलातीर्थपीठपदवाच्यममाप्यपारावारीण-स्वामिश्रीहरिनामदासविरचिता हेत्वाभाससामान्यनिरुक्तिचन्द्रकला टीका समाप्ता ।

